आदिकविश्रीमद्वाल्मीकिमहामुनिप्रणीतो

# योगवासिष्ठः ।

परमहंसश्रीमदानन्दबोधेन्द्रसरस्वतीप्रणीतवासिष्ठमहारामायण-
तात्पर्यप्रकाशाख्यव्याख्यासंवलितः ।

## वैराग्यप्रकरणं प्रथमम् १

### प्रथमः सर्गः १

श्रीमहागणपतिचरणारविन्दाभ्यां नमः ।

ॐनमो ब्रह्मणे ब्रह्मविद्भ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो
वसिष्ठविश्वामित्रव्यासवाल्मीकिशुकादिभ्यः श्रीरामभद्राय च ।

अजमजरमनाद्यनन्तमन्तर्निजसुखबोधसदद्वितीयपूर्णम् ।
शिवमखिलहृदि स्फुरत्स्वमायाविकसितविश्वविलासमानताः स्मः १

स्मृतिफलितसमस्ताभीष्टमुद्यद्दिनेश-
प्रतिभटनिजशोभाशान्तविघ्नान्धकारम् ।
कमपि शिवभवान्योरङ्कसौभाग्यमन्तः
सुरमणिमवलम्बे चारु लम्बोदराख्यम् ॥ २ ॥

मुग्धस्मिताञ्चितमनोज्ञमुखेन्दुबिम्बं
स्निग्धामृतप्रतिमचारुकृपाकटाक्षम् ।
अग्रेसरैरनुसृतं मुनिभिर्मुनीनां
न्यग्रोधमूलवसतिं गुरुमाश्रयामः ॥ ३ ॥

त्रिभुवनावनकॢप्तकृतोदयः सदभयामलबोधसुखाद्वयः ।
सुजनहृद्गिरिगह्वरकेसरी शरणमस्तु सदा नरकेसरी ॥ ४ ॥

दक्षे वराक्षवलयावभयं च वामे
या पुस्तकं च दधती विधिनेत्रपेया ।
सा शारदाब्जनयना शरदिन्दुशोभा
भासा स्वया हरतु मे हृदयान्धकारम् ॥ ५ ॥

ये नेत्राणि हरस्य यैर्जगदिदं प्रद्योतितं चेष्टते
यत्रैवायतते श्रुतिस्मृतिनुतो धर्मः सशर्मोदयः[1] ।
ये कालं कलयन्ति ये च परमस्वज्योतिरात्मोपमा-
स्ते सूर्येन्द्वनला भवन्तु हृदि मे बोधाब्जिनीभानवः ॥६॥

वक्त्रेन्दुभिर्दिक्षु तमो हरद्भिर्वेदार्थसारामृतमुद्गिरन्तम् ।
वाणीभुजाश्लिष्टमभीष्टसिद्ध्यै तं ब्रह्मविद्यादिगुरुं प्रपद्ये ॥ ७ ॥

यद्वाक्यामृतपायिनां प्रतिपदं सत्यं सुधा नीरसा
यद्वाक्यार्थविचारणादभिमतः स्वर्गोऽपि कारागृहम् ।
यद्वाणीविशदात्मपूर्णमनसां तुच्छं जगत्तूलव-
त्तस्मै श्रीगुरवे वसिष्ठमुनये नित्यं नमस्कुर्महे ॥ ८ ॥

यस्यार्षं[3] प्रथिता जगत्त्रयहिता सा वेदमाता परा
यश्चक्रे तपसा वशे सुरगणानन्यैतिसस्रक्षुर्जगत्[4] ।
तं बोधाम्बुनिधिं तपस्विमुकुटालंकारचिन्तामणिं
विश्वामित्रमुनिं शरण्यमनघं भूयो नमस्याम्यहम्[5] ॥ ९ ॥

श्रुत्या ब्रह्मैव रामः प्रकटितमहिमा येन तस्मै वसिष्ठो
यः सीतां ब्रह्मविद्यामिव सदसि पुनः सत्यशुद्धां किलादात् ।
यद्वाणी मोहमूलं शमयति जगदानन्दसंदोहदोग्ध्री
तस्मै वाल्मीकये श्रीगुरुतमगुरवे भूरिभावैर्नताः स्मः ॥१०॥

पूर्णानन्दस्वभावः स्वजनहितकृते माययोपात्तकायः
कारुण्यादुद्दिधीर्षुर्जनमनवरतं मोहपङ्के निमग्नम् ।
आविश्यान्तर्वसिष्ठं बहिरपि कलयञ्शिष्यभावं वितेने
यः संवादेन शास्त्रामृतजलधिममुं रामचन्द्रं प्रपद्ये ॥ ११ ॥

---

१ 'सुखोदयः' पाठः. २ 'वायतते' पाठः. ३ 'यस्यार्षप्रथिता'; 'यस्यार्ष-प्रथिता' पाठौ. ४ 'नन्यान्सिसृक्षुः' पाठः. ५ 'नमस्यामहे' पाठः.

**श्रीः । यतः सर्वाणि भूतानि प्रतिभान्ति स्थितानि च । यत्रैवोपशमं यान्ति तस्मै सत्यात्मने नमः ॥ १**

विद्याभिः सह विश्रुता श्रितवती येषां मुखं भारती
सत्त्वोत्कर्षसमाधिभिः स्थिरमहो तद्ब्रह्म येषां हृदि ।
पादाम्भोरुहमाश्रिताश्च सततं तीर्थैः समं संपदः
श्रीसर्वज्ञसरस्वतीतिविदिताञ्श्रीमद्गुरूंस्तान्भजे ॥ १२ ॥
श्रीः संश्रितैव चरणौ हृदयं च राम-
श्चन्द्रो मुखं गुणभरेण सरस्वती च ।
येषामतस्तदभिधाङ्कितनामधेयान्
श्रीमद्गुरून्गुरुतरान्प्रणतोऽस्मि नित्यम् ॥ १३ ॥
तापध्वस्तिव्यापृतकारुण्यकटाक्षान्
व्याख्यावाणीनिर्वृतसर्वाङ्घ्रिशरण्यान् ।
श्रीमद्रामानन्दमुनीनद्भुतचर्या-
नार्यान्नित्यं देशिकवर्यान्प्रणतोऽस्मि ॥ १४ ॥
विश्वेशोऽपि हरिः शरण्यचरणो यान्मानयन्सौहृदा-
च्छान्तान्नित्यमनुव्रजामि रजसा पूयेय चेत्यब्रवीत् ।
यत्पूजां विदधे श्रुतिर्मतिमतां सर्वेष्टसिद्ध्यै सदा
जीवन्मुक्तसुखात्मपूर्णमनसस्तान्ब्रह्मनिष्ठान्भजे ॥ १५ ॥
कृतिमिरमुकराः क नु प्रबन्धाः क च बत बालिशबुद्धिरेष जन्तुः ।
तदपि विरचनेऽत्र सद्गुरूणां सदयनिरीक्षणमेव मेऽवलम्बः १६
अशेषविद्याम्बुधिपारगाणामपास्तरागादिमनोमलानाम् ।
कृपानिधीनां कृतिनां ममास्मिन्सतां पदाब्जस्मरणं सहायः ॥१७॥
यत्कृपालेशमात्रेण तीर्णोऽस्मि भवसागरम् ।
श्रीमद्गङ्गाधरेन्द्राख्यान्श्रीगुरूंस्तान्सदा भजे ॥ १८ ॥
आनन्दबोधयतिना श्रीमद्गुरुवचोमृतैः ।
वासिष्ठार्थप्रकाशोऽयं यथामति वितन्यते ॥ १९ ॥
प्रशंसन्तु स्वैरं मतिभिरथ निन्दन्तु सुधियः
प्रवृत्तिर्मे यस्मान्न भवति जनाराधनकृते ।
अनेन व्याजेनामृतरसवसिष्ठोक्तिभरिते
विहर्तुं वाञ्छामि प्रतिदिवसमानन्दजलधौ ॥ २० ॥
यथामति बुभुत्सुभ्यः साहाय्यं संकटेष्विव ।
दुरूहश्लोकभावेषु दर्शयिष्ये परिश्रमम् ॥ २१ ॥
स्थितमेकरसे युक्तया नानारसविजृम्भणम् ।
वासिष्ठं रोचयत्वेतत्सुभोज्यं लवणं यथा ॥ २२ ॥
अप्यल्पमतिदुर्बोधं स्फुटं व्याख्यास्यते पदम् ।
द्विस्त्रिर्व्याख्यातपूर्वं तु दुरूहमपि मोक्ष्यते ॥ २३ ॥
अनन्यपूर्वव्याख्यातं ग्रन्थं मे व्याचिकीर्षतः ।
सन्तः श्रमज्ञाः कृपया क्षमध्वं स्खलितं क्वचित् ॥ २४ ॥

**अथ** जगदिदमनादिमहामोहनिशासुप्तमनवरतदुःस्वप्नभ्रमपरम्पराकल्पिते जन्मजरामयमरणहर्षामर्षशोकाद्यनर्थसंकटसहस्रसंकुले ग्रहातिग्रहव्याघ्रभीषणे तापत्रितयदावानलज्वाल-[1]मालाकुले षडूर्मिजालेऽरिषड्वर्गव्याधवेध्यमान[2]प्राणिनिकाये संसारमहारण्ये मोमुह्यमानं विवेकान्धं प्रबोधोपायदौर्लभ्याद्विषीदत्समुद्वीक्ष्य शास्त्रभानूदयेन तत्प्रबोधनाय भगवतः पद्मजन्मनः शासनात्स्वतश्च प्रवर्तमानः परमकारुणिको भगवान्वाल्मीकिः प्रारिप्सितस्य महतः शास्त्रस्य निर्विघ्नपरिसमाप्तिप्रचयगमनादिसिद्धये वक्ष्यमाणश्रुतिस्मृतिसदाचारप्रापितं सर्वविघ्नमूलोच्छेदक्षमं सच्चिदानन्दाद्वयप्रत्यगात्मपरब्रह्मप्रणतिलक्षणं मङ्गलमाचरन्नर्थाच्छास्त्रस्य विषयप्रयोजने तटस्थस्वरूपलक्षणाभ्यां संक्षिप्य दिदर्शयिषुः प्रथमं 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' इति श्रुत्युक्ततटस्थलक्षणसिद्धसदद्वयस्वभावं तत्पदार्थं नमस्यति—**यत** इति । यतो यस्मात्परमार्थसदद्वितीयात्मवस्तुनः प्रकृतिभूतात्सर्वाण्याकाशादीनि महाभूतानि भौतिकानि च सर्गादिकाले यत्सत्तयैव सत्तां प्रतिलभ्य भान्ति प्रथन्ते आविर्भवन्तीत्यर्थः । तथा स्थितिकाले च यत्सत्तयैव स्थितानि, तथा प्रलयकालेऽपि यत्रैव यत्सत्तामात्रपरिशेषेणोपशमं तिरोभावं यान्ति तस्मै सत्यात्मने स्वाध्यारोपितसर्वभावानां पारमार्थिकस्वरूपभूताय सर्वप्राणिनां वास्तवात्मभूताय च परब्रह्मणे नमः । तन्नमस्कारे च 'यत्र देवाः सर्वे ऐकं[3] भवन्ति' इति श्रुतेरनमस्कृतस्य देवतान्तरस्यापरिशेषात्सर्वनमस्कारसिद्ध्यास्य मङ्गलस्य सर्वोत्कर्षात्सर्वविघ्नोच्छेदादिफलसिद्धिः ॥ अत्र यतो-भूतानीति पदाभ्यां 'यतो वा इमानि भूतानि जायन्ते', 'जन्माद्यस्य यतः' इति तद्घटितश्रुतिसूत्रोक्तलक्षणप्रत्यभिज्ञानादस्य तन्मूलकत्वमिति न सांख्यादिकल्पितमहदादिकारणेषु यास्कोपदर्शितावान्तरकारणेषु चातिव्याप्तिः । अत्र प्रकृतिपञ्चम्यैवोपादानत्वलाभान्निनयोपादानं लक्षणत्रयप्रदर्शनायेति केचित् । निमित्तेऽपि पञ्चमीदर्शनात्लयाधारत्वोक्तिरुपादानत्वलाभाय । स्थितिहेतुत्वोक्तिस्तु चेतनानामेव पालकत्वदर्शनाच्चेतनत्वालाभेन कर्त्रन्तरनिरासायेति त्रितयलब्धमभिन्ननिमित्तोपादानत्वमेकमेव लक्षणमित्यन्ये । वस्तुतस्तु 'सत्यं ज्ञानमनन्तं ब्रह्म', 'सदेव सोम्येदमग्र आसीत्' इति श्रुतौ ज्ञेयत्वेनोपक्रान्ताद्वितीयसन्मात्रवस्तुपरिचयाय 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः', 'तत्तेजोऽसृजत' इत्यादिना तटस्थलक्षणावतारात् 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति श्रुत्युपदर्शितदिशोत्पत्त्यादिकालत्रयेऽपि सदव्यभिचारात्कार्यस्य कारणव्यतिरिक्तसत्त्वानुपलम्भाच्च परसत्तोपजीवित्वादध्यारोपितं कार्यजातमाविद्यकमनृतं कारणतत्त्वमेव ब्रह्म वस्तुसत्यमित्यध्यारोपापवादाभ्यां निष्प्रपञ्चविषयप्रयोजनसिद्धिप्रतिपादनाय त्रितयघटितलक्षणोपादानम् । नह्येकैकोपादाने कार्यस्य विवर्तत्वसिद्धिरिति । अतएव हि श्रुतौ जायन्ते-अभिसंविशन्तीति पदे प्रतिभानाप्रतिभानलक्षणाविर्भावतिरोभावपरे न विकारपरे इति

१ 'ज्वालामाला' इति पाठः. २ 'बाध्यमान' इति पाठः.

३ 'एकीभवन्ति' इति पाठः.

**ज्ञाता ज्ञानं तथा ज्ञेयं द्रष्टा दर्शनदृश्यभूः ।**
**कर्ता हेतुः क्रिया यस्मात्तस्मै ज्ञप्त्यात्मने नमः ॥ २**

**स्फुरन्ति सीकरा यस्मादानन्दस्याम्बरेऽवनौ ।**
**सर्वेषां जीवनं तस्मै ब्रह्मानन्दात्मने नमः ॥ ३**

**सुतीक्ष्णो ब्राह्मणः कश्चित्संशयाकृष्टमानसः ।**
**अगस्तेराश्रमं गत्वा मुनिं पप्रच्छ सादरम् ॥ ४**

सूचनाय प्रतिभान्त्युपशमं यान्तीत्युक्तम् । वृद्धिविपरिणामयोराविर्भावेऽपक्षयस्य च तिरोभावेऽन्तर्भावात् स्थितेश्चाधिष्ठानसत्तानुवेधमात्ररूपत्वान्नाध्यारोपातिरिक्तविकारसिद्धिः । उपपादयिष्यते चेत्थमेव जगद्विरचनं विस्तरेणोत्पत्तिप्रकरणे ॥ १ ॥ प्रतिभान्तीति सामान्यतः सूचितं तस्य चिदेकरसत्वं सर्वानुभवसिद्धत्वेनोपपादयंस्त्वंपदार्थतत्त्वभूतं तमेव पुनर्नमस्यति—**ज्ञातेति** । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुतेर्यस्माद्बिम्बभूतात्कूटस्थचिदेकरसात्सतः स्वयमेव प्रतिबिम्बभावेन समष्टिव्यष्टिविज्ञानमनोमयकोशद्वयात्मकान्तःकरणोपाध्यनुप्रवेशेन प्रतप्तायःपिण्डप्रविष्टवह्निरिवाध्यस्तैक्येन तज्जाड्यमभिभूय तदभिज्वलयन् ज्ञाता । विस्फुलिङ्गानिव तद्वृत्तीरभिज्वलयन् ज्ञानम् । वृत्तौ विषयाकारापन्नायां स्वयमपि तद्द्वारा तदाकारस्तद्भावमिवापन्नो ज्ञेयम् । परोक्षसाधारण्येनोक्तमेवार्थं प्रत्यक्षेण स्फुटीकर्तुमाह—**द्रष्टेति** । स एव ज्ञानेन्द्रियाण्युपादाय द्रष्टा । तत्संप्रयोगजन्यवृत्तीरुपादाय दर्शनम् । तत्फलात्मना विषयान्व्याप्य ताद्रूप्यानुरञ्जनात्स्वयमपि दृश्य इव भवतीति दृश्यभूः । तथा स एव कर्मेन्द्रियप्राणशरीराण्युपादाय कर्ता । फलभोक्तृभावेन क्रियोत्पादननिमित्तत्वाद्धेतुः । क्रियासाकल्यवैकल्ययोरहमेव सकलो विकल इति क्रियाभिमानाच्च क्रिया । 'एष हि द्रष्टा श्रोता मन्ता कर्ता बोद्धा विज्ञानात्मा पुरुषः प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः' इत्यादिश्रुतेः । एवं सर्वव्यवहारेषु प्रतीचः स्वपरस्फूर्तिनिर्वाहकत्वाच्चिद्रूपतया सर्वानुभवसिद्धोऽपि विचित्रोपाध्यनुरञ्जनव्यामोहाच्चित्रपटे प्रभाशौक्ल्यमिव न विविच्यानुभूयत इति पृथक्करणाय यस्मादिति निमित्तपञ्चम्या निर्देशः । यत्संनिधाननिमित्तकमेव कर्त्रादिस्फुरणं नतु यत्स्वभावभूतं व्यभिचारित्वाद्दृशो दृश्यस्वभावत्वानुपपत्तेश्चेति भावः । अतस्तस्मै ज्ञात्रादिसाक्षिणे परमार्थतो ज्ञप्त्यात्मने ज्ञप्तिमात्रत्वेन परिशिष्टाय प्रत्यगात्मने नम इत्यर्थः ॥२॥ एवं पदार्थौ परिशोध्य तटस्थलक्षणपर्यवसानस्थानं 'आनन्दो ब्रह्मेति व्यजानात्' इति श्रुतिदर्शितनिरतिशयानन्दरूपं परमपुरुषार्थभूतमखण्डवाक्यार्थं नमस्यति—**स्फुरन्तीति** । यस्मात्प्रत्यगात्मनोऽविद्यावरणकामादिविक्षेपतिरस्कृतनिरतिशयानन्दसमुद्रादम्बरे आकाशे ब्रह्मलोकान्ते स्वर्गे देवेष्विति यावत् । तथा अवनौ भूमौ मनुष्यादिस्तम्बपर्यन्तेषु तत्तदुच्चावचविषयेन्द्रियसंयोगजनितान्तःकरणवृत्तिवैशद्यतारतम्येनावरणाभिभवतारत-

१ 'वैषम्य' इति पाठः.

**सुतीक्ष्ण उवाच ।**

**भगवन्धर्मतत्त्वज्ञ सर्वशास्त्रविनिश्चित ।**
**संशयोऽस्ति महानेकस्त्वमेतं कृपया वद ॥ ५**

**मोक्षस्य कारणं कर्म ज्ञानं वा मोक्षसाधनम् ।**
**उभयं वा विनिश्चित्य एकं कथय कारणम् ॥ ६**

म्यात्सरोमुकुरमण्यादिषु गिरिप्रतिबिम्बा इवौपाधिकभेदतारतम्येन विभाव्यमानत्वादानन्दस्य सीकराः कणा इव सीकराः स्फुरन्ति । सर्वैर्भ्रान्त्या अनात्मत्वेनात्मशेषत्वेन परिच्छेदभेदवैचित्र्यदुःखसंभेदक्षयिष्णुत्वादिभिश्चानुभूयन्त इति यावत् । परमार्थतस्तु न तथा, किंतु तदेव निष्कृष्टोपाधिभेदं सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां जीव्यते अनेनेति जीवनं सारभूतमात्मतत्त्वम् । 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ', 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति', 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' इति श्रुतेः । अतएव भेदकाभावात्स्वरूपलक्षणैक्याच्च स एव 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह', 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इति श्रुतिप्रसिद्धापरिच्छिन्नब्रह्मानन्द आत्मा च । नान्य आत्मा नाम कश्चिदस्ति 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति विज्ञाता' इत्यादिश्रुतेः । तस्मै ब्रह्मानन्दात्मने परमपुरुषार्थरूपाय नम इत्यर्थः । इह मङ्गलाचरणं शास्त्रनिर्माणारम्भार्थमुत्तरसर्गे तु शिष्येभ्यस्तदुपदेशस्यारम्भार्थमिति न पौनरुक्त्यम् ॥ ३ ॥

**अत्रार्षदैवसंवादः संप्रदायविशुद्धये ।**
**रामाज्ञाननिमित्तं चाप्युपोद्घाताय वर्ण्यते ॥ १ ॥**

इत्थं मङ्गलविषयादिप्रदर्शनमुखेन शास्त्रार्थं सुप्रबोधाय संक्षेपतः प्रदर्श्य सहसाधनोपपत्त्यादिभिर्विस्तरेण तमेवार्थं व्युत्पादयितुं शास्त्रमारभमाणस्तस्मिन् श्रोतॄणां विश्वासदार्ढ्याय बहुतरब्रह्मविन्मूर्धन्यमहर्षिजुष्टब्रह्मादिसंप्रदायप्राप्तजीवन्मुक्तिफलब्रह्मविद्योपबृंहणरूपत्वप्रदर्शनाय श्रीवसिष्ठरामसंवादावतारणोपोद्घातभूतामाख्यायिकामारभते—**सुतीक्ष्ण** इत्यादिना । सुतीक्ष्णः तपःकर्मोपासनाशोधितत्वाच्छोभना दुरूहार्थग्रहणपटीयस्त्वाच्च तीक्ष्णा बुद्धिर्यस्येति योगरूढान्वर्थनामधेयः । ब्राह्मणग्रहणं ब्राह्मणानामेव ब्रह्मविद्यायां मुख्याधिकार इति द्योतनार्थम् । संशयेन जिज्ञासायै आकृष्टं मानसं यस्येति जिज्ञासुरित्यर्थः । सादरं विध्युक्तसमित्पाणित्वप्रणिपातप्रपत्त्याद्यादरसहितं यथा स्यात्तथा ॥ ४ ॥ धर्मं तत्त्वं च जानासीति धर्मतत्त्वज्ञ । सर्वेषु शास्त्रेषु विशिष्टं निश्चितं निश्चयो यस्य स तथा । परस्परविरुद्धार्थानेकश्रुतिस्मृतिवादिविप्रतिपत्तिजटिलत्वात्सहसा दुरुच्छेदतया महान् । एतं संशयं तदपनोदकं तत्त्वमिति यावत् ॥५॥ कारणमुत्पादकम् । साधनं व्यञ्जकम् । अत्र मोक्षो हि परमपुरुषार्थरूपत्वप्रसिद्धेर्नित्यनिरतिशयानन्दरूपो वाच्यः, स च स्वर्ग एव । 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥' इति श्रुत्या

अगस्तिरुवाच ।

**उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः ।**
**तथैव ज्ञानकर्मभ्यां जायते परमं पदम् ॥ ७**
**केवलात्कर्मणो ज्ञानाद्धि मोक्षोऽभिजायते ।**
**किंतूभाभ्यां भवेन्मोक्षः साधनं तूभयं विदुः ॥ ८**
**अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि ते ।**
**कारुण्याख्यः पुरा कश्चिद्ब्राह्मणोऽधीतवेदकः ॥ ९**
**अग्निवेश्यस्य पुत्रोऽभूद्वेदवेदाङ्गपारगः ।**
**गुरोरधीतविद्यः सन्नाजगाम गृहं प्रति ॥ १०**
**तस्थावकर्मकृत्तूष्णीं संशयानो गृहे तदा ।**
**अग्निवेश्यो विलोक्याथ पुत्रं कर्मविवर्जितम् ॥ ११**
**प्राह एतद्वचो निन्द्यं गुरुः पुत्रं हिताय च ।**

अग्निवेश्य उवाच ।

**किमेतत्पुत्र कुरुषे पालनं न स्वकर्मणः ॥ १२**
**अकर्मनिरतः सिद्धिं कथं प्राप्स्यसि तद्वद ।**
**कर्मणोऽस्मान्निवृत्तेः किं कारणं तन्निवेद्यताम् ॥ १३**

कारुण्य उवाच ।

**यावज्जीवमग्निहोत्रं नित्यं संध्यामुपासयेत् ।**
**प्रवृत्तिरूपो धर्मोऽयं श्रुत्या स्मृत्या च चोदितः १४**
**न धनेन भवेन्मोक्षः कर्मणा प्रजया न वा ।**
**त्यागमात्रेण किंत्वेके यतयोऽश्नन्ति चामृतम् ॥ १५**
**इति श्रुत्योर्द्वयोर्मध्ये किं कर्तव्यं मया गुरो ।**
**इति संदिग्धतां गत्वा तूष्णींभूतोऽस्मि कर्मणि १६**

अगस्तिरुवाच ।

**इत्युक्त्वा तात विप्रोऽसौ कारुण्यो मौनमागतः ।**
**तथाविधं सुतं दृष्ट्वा पुनः प्राह गुरुः सुतम् ॥ १७**

अग्निवेश्य उवाच ।

**शृणु पुत्र कथामेकां तदर्थं हृदयेऽखिलम् ।**
**मत्तोऽवधार्य पुत्र त्वं यथेच्छसि तथा कुरु ॥ १८**

'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्' इति जैमिनिवचनाच्च तस्य तथात्वसिद्धेः । नच जन्यत्वेन नाशानुमानम् । श्रुतिविरुद्धेऽर्थे अनुमानानुदयात्, तस्याजन्यत्वे साधनोपदेशानर्थक्यप्रसङ्गादिति कर्ममीमांसकमतानुसारेण कारणं कर्मेति प्रथमः कल्पः । 'न कर्मणा न प्रजया', 'प्लवा ह्येते अदृढा यज्ञरूपाः' इत्यादिश्रुतिभिः कर्मफलानित्यत्वप्रतिपादनात् 'ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये' इत्यादिश्रुत्या मुक्तौ ज्ञानातिरिक्तसाधननिषेधाज्ज्ञानस्य च प्रमाणजन्यस्य वस्त्वभिव्यक्त्यतिरिक्तफलाप्रसिद्धेरित्यौपनिषदमतमवलम्ब्य द्वितीयः कल्पः । वाजसनेयिनां मन्त्रोपनिषदि 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः' इति यावज्जीवानुष्ठेयत्वेन कर्म, 'असुर्या नाम ते लोका अन्धेन तमसा वृताः' इत्यादिना अविद्वन्निन्दापूर्वकं ब्रह्मविद्यां च प्रस्तुत्य तयोरेकैकस्य मोक्षसाधनताम्, 'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाꣳ रताः' इति निन्दित्वा 'विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति समुच्चितयोरात्यन्तिकानर्थनिवृत्तिनिरतिशयानन्दावाप्तिलक्षणमोक्षहेतुत्वाभिधानात्तृतीयः कल्प इति त्रिकोटिकः संशयो दर्शितः । तेष्वेकं निर्णयकारणं कथयेत्यर्थः ॥ ६ ॥ 'यन्न दुःखेन' इति श्रुतेर्बहुतरश्रुत्यादिविरोधेनापेक्षिकनित्यत्वपरत्वात्तेषु प्रथमकल्पस्यासंभवं द्वितीयतृतीयकल्पयोः कर्मणां चित्तशुद्धिद्वारा ज्ञानाङ्गत्वेऽपि श्रुतितात्पर्याविरोधादभेदं च मन्यमानोऽगस्तिः प्रतिवचनमुवाच—**उभाभ्या**मित्यादिना । यथा खे आकाशे पक्षिणामुभाभ्यां पक्षाभ्यामेव गतिरभिमतदेशप्राप्तिर्जायते नैकैकेन तथैव 'तद्विष्णोः परमं पदम्' इति श्रुतिप्रसिद्धं संसाराध्वनः पारं कैवल्यमधिकारिणामात्मनि ज्ञानकर्मभ्यां जायते नैकैकेन । कर्मणां पूर्वभावस्तु प्रवृत्तिनिवृत्त्योर्युगपदसंभवाद्विरुद्धाधिकारिविशेषणकत्वाच्चार्थसिद्ध इति न यौगपद्यांशे दृष्टान्तः । यथा दर्पणे प्रतिबिम्बोदये मार्जनालोकौ द्वावप्यावश्यकौ तद्वत्कर्मकृतचित्तशुद्धिः प्रमाणजन्यवृत्तिश्चाविद्यानिवृत्तावावश्यके अशुद्धचित्तैः शतशः श्रुतेऽपि ज्ञानफलादर्शनादिति भावः ॥ ७ ॥ तदेव द्रढयन्पुनराह—**केवला**दिति । साधनं व्यञ्जकं विदुः । ब्रह्मविद इति शेषः । तथाच विदुषामनुभवसिद्धे नात्र विप्रतिपत्तव्यमिति भावः । 'विद्यां चाविद्यां च' इति श्रुतिस्तूपासनकर्मसमुच्चयपरा न ब्रह्मविद्यायाः कर्मसमुच्चयपरा । तदङ्गत्वेनोपक्रमे 'तेन त्यक्तेन भुञ्जीथाः' इति संन्यासविधिविरोधादिति प्रपञ्चितं भाष्यकृद्भिरिति न कश्चिद्विरोधः । नत्वत्र यथाश्रुतमापाततो गृहीत्वा ज्ञानकर्मसमुच्चयपक्ष एवैतद्ग्रन्थाभिमत इति भ्रमितव्यम् । 'अलब्धज्ञानदृष्टीनां क्रियामात्रं परायणम् । यस्य नास्त्यम्बरं पट्टं कम्बलं किं त्यजत्यसौ ॥' इत्यादिना मणिकाचोपाख्यानेन चोत्तरत्र केवलज्ञानेनैव मुक्तिरिति व्यवस्थापनेन पूर्वोत्तरविरोधापत्तेः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ **प्राह** एतदित्यसंभिः संहितायामनित्यत्वात् । निन्द्यमविधिना कर्मपरित्यागान्निन्दार्हं पुत्रम् ॥ १२ ॥ सिद्धिं प्रत्यवायपरिहारं स्वर्गं मोक्षं वा ॥ १३ ॥ 'अग्निहोत्रं जुहोति' इति वाक्यशेषः । चोदितो विहितः ॥ १४ ॥ एके मुख्याः । चकारोऽनर्थनिवृत्तिसमुच्चयार्थः ॥ १५ ॥ द्वयोर्विरुद्धार्थयोरिति यावत् । संदिग्धतां संदिहानताम् । अकर्मकत्वात् 'गत्यर्थाकर्मक—' इति कर्तरि क्तः ॥ १६ ॥ १७ ॥ एकां सर्वसंदेहमूलाज्ञानोच्छेदित्वान्मुख्यां कथां वक्ष्यमाणमहारामायणरूपाम् । मुख्यत्वं च प्रसिद्धमादित्यपुराणे पञ्चदशाध्याये—'ज्ञानं न त्वात्मनो धर्मो न गुणो वा कथंचन । ज्ञानस्वरूप एवात्मा नित्यः सर्वगतः शिवः ॥ अहमात्मा समस्तानां भूतानां परमेश्वरः । एक एव पदार्थाश्च कल्पिता मयि षण्मुख ॥ विज्ञानमेतदखिलं विश्वा-

१ 'अविद्यामग्निहोत्रादिलक्षणं कर्मेति महीधरः'.

२ 'क्रियामुत्र' इति पाठः.

सुरुचिर्नाम काचित्स्त्री अप्सरोगणउत्तमा ।
उपविष्टा हिमवतः शिखरे शिखिसंवृते ॥ १९
रमन्ते कामसंतप्ताः किन्नर्यो यत्र किंनरैः ।
स्वर्धुन्योघेन संसृष्टे महाघौघविनाशिना ॥ २०
दूतमिन्द्रस्य गच्छन्तमन्तरिक्षे ददर्श सा ।
तमुवाच महाभागा सुरुचिश्चाप्सरोवरा ॥ २१

सुरुचिरुवाच ।

देवदूत महाभाग कुत आगम्यते त्वया ।
अधुना कुत्र गन्तासि तत्सर्वं कृपया वद ॥ २२

देवदूत उवाच ।

साधु पृष्टं त्वया सुभ्रु यथावत्कथयामि ते ।
अरिष्टनेमी राजर्षिर्दत्त्वा राज्यं सुताय वै ॥ २३
वीतरागः स धर्मात्मा निर्ययौ तपसे वनम् ।
तपश्चरत्यसौ राजा पर्वते गन्धमादने ॥ २४
कार्यं कृत्वा मया तत्र तत आगम्यतेऽधुना ।
गन्तास्मि पार्श्वे शक्रस्य तं वृत्तान्तं निवेदितुम् २५

अप्सरा उवाच ।

वृत्तान्तः कोऽभवत्तत्र कथयस्व मम प्रभो ।
प्रष्टुकामा विनीतास्मि नोद्वेगं कर्तुमर्हसि ॥ २६

देवदूत उवाच ।

शृणु भद्रे यथावृत्तं विस्तरेण वदामि ते ।
तस्मिन्राज्ञि वने तत्र तपश्चरति दुस्तरम् ॥ २७
इत्यहं देवराजेन सुभ्रूराज्ञापितस्तदा ।
दूत त्वं तत्र गच्छाशु गृहीत्वेदं विमानकम् ॥ २८
अप्सरोगणसंयुक्तं नानावादित्रशोभितम् ।
गन्धर्वसिद्धयक्षैश्च किन्नराद्यैश्च शोभितम् ॥ २९
तालवेणुमृदङ्गादि पर्वते गन्धमादने ।
नानावृक्षसमाकीर्णे[१] गत्वा तस्मिन्गिरौ शुभे ॥ ३०
अरिष्टनेमिं राजानं दूतारोप्य विमानके ।
आनय स्वर्गभोगाय नगरीममरावतीम् ॥ ३१

दूत उवाच ।

इत्याज्ञां प्राप्य शक्रस्य गृहीत्वा तद्विमानकम् ।
सर्वोपस्करसंयुक्तं तस्मिन्नद्रावहं ययौ ॥ ३२
आगत्य पर्वते तस्मिन्राज्ञो गत्वाऽऽश्रमं मया ।
निवेदिता महेन्द्रस्य सर्वाज्ञाऽरिष्टनेमये ॥ ३३
इति मद्वचनं श्रुत्वा संशयानोऽवदच्छुभे ।

राजोवाच ।

प्रष्टुमिच्छामि दूत त्वां तन्मे त्वं वक्तुमर्हसि ॥ ३४
गुणा दोषाश्च के तत्र स्वर्गे वद ममाग्रतः ।
ज्ञात्वा स्थितिं तु तत्रत्यां करिष्येऽहं यथारुचि ॥ ३५

दूत उवाच ।

स्वर्गे पुण्यस्य सामग्र्या भुज्यते परमं सुखम् ।
उत्तमेन तु पुण्येन प्राप्नोति स्वर्गमुत्तमम् ॥ ३६

---

कारमबुद्धयः । पश्यन्ति ज्ञानिनस्त्वेकमात्मरूपमिदं जगत् ॥ दुर्विज्ञेयं वसिष्ठेन रामाय कथितं पुरा ॥' इति षण्मुखं प्रति शिवेनाविद्यास्वरूपं ब्रह्मतत्त्वं च विस्तरेणोपदिश्य स्ववाक्ये विश्वासदार्ढ्याय विश्वसनीयतमत्वेन प्रसिद्धस्य ब्रह्मविद्यामूर्धन्यस्यास्य ग्रन्थस्य संमतित्वेनोदाहरणात् । द्वितीयं पुत्रेति संबोधनं कथार्थलक्षणपितृधनग्रहणयोग्यत्वद्योतनार्थम् ॥ १८ ॥ उत्तमा ब्रह्मविद्याधिकारिविशेषणसंपन्नत्वाच्छ्रेष्ठा ॥ १९ ॥ २० ॥ ज्ञानोपदेशफलभागिनीत्वान्महाभागा । चकारो न केवलं नाम्नैव किंतु शोभनायां ब्रह्मविद्यायां रुचिः संजाता अस्या इत्यर्थतोऽपि सुरुचिरिति समुच्चयार्थः । दिव्यदृशा दूतब्रह्मवित्त्वपरिज्ञानसमर्थत्वाच्चेतराप्सरोभ्यो वरा ॥ २१ ॥ सुरुचिरुवाचेति । अर्थाद्योग्यतयाभ्युत्थानाभिवादनोपायनाहरणपूजनोपगमनपूर्वकमिति गम्यते । स्वाभिलषितब्रह्मविद्यासंपन्नस्त्वमिति द्योतनाय महाभागेति संबोधनम् । प्रकृतोपयोगयोग्योऽन्योऽपि 'क्वैष तदाभूत्कुत एतदागादितो मुच्यमानः क्व गमेष्यसि' इति श्रौतप्रश्नसाम्यादिहौपाधिकजीवभावेन कस्मादागम्यते उपाध्यपगमेन च कस्मिन्स्वरूपे गन्तासि त्वमिति सर्वाधिष्ठानब्रह्मतत्त्वविषय एव प्रश्नोऽभिप्रेत इति गम्यते । तत्सर्वं पूर्णं कृपया वदेति पदस्वारस्यादप्ययमेव प्रश्नार्थ इति गम्यते ॥ २२ ॥ गूढाभिसंधिर्महान्प्रश्नार्थो भ्रूविलासेन सूचितः स्वेन परिज्ञात इति स्वाभिप्रायं सूचयंस्तथैव संबोधयति—सुभ्रुवति । यथावत् यथावृत्तं यथार्थमात्मतत्त्वं च ॥ २३ ॥ २४ ॥ कार्यमवश्यसंपाद्यमात्मज्ञानेन कृतार्थत्वं तस्य स्वस्य च कृत्वा संपाद्य । वृत्तः संपन्नः अन्तः संसारसीमा यस्य तं तथाभूतं राजानमिति चार्थः ॥ २५ ॥ अतएव हि तत्तथाविधं जिज्ञासमाना सोवाच । वृत्तान्तः प्राप्तसंसारान्तः स राजा कोऽभवत् कीदृक्स्वरूपेण स्थित इति निगूढः प्रश्नः । बह्वत्र वक्तव्यं नाल्पेन तदसंभावनादिदोषशान्तिरित्यनुद्वेगप्रार्थना । देवानां परोक्षप्रियत्वाच्च स्फुटोक्त्या प्रश्नोत्तरयोः स्वायत्तयोरपि निगूढोक्त्यात्र उच्यते ॥ २६ ॥ २७ ॥ इति वक्ष्यमाणप्रकारेण । तत्र गन्धमादने । विरक्तश्चेत्तत्तुच्छ्यात्ल्पं कुत्सितं चेत्युपेक्षार्हमिति सूचनाय विमानकमिति कैन्प्रयुक्तः[२] ॥ २८ ॥ शोभितान्तानि विमानविशेषणानि ॥ २९ ॥ विमानाद्बहिरपि सैनिकैस्तालवेणुमृदङ्गादि गृहीत्वेत्यनुषङ्गः ॥ ३० ॥ ॥ ३१ ॥ उपस्कराणि गुणवत्तयोपकल्पितानि भोगसाधनानि । 'उपात्प्रतियत्न—' इति सुट् । संप्रति स्वस्य तत्त्वज्ञत्वादज्ञदृशाभिमते देहादिद्वारके स्वगमने उन्मादादिकृत इव पारोक्ष्यारोपान्मत्तोऽहं किल विललापेतिवद्ययाविति लिट् ॥ ३२ ॥ ३३ ॥ ३४ ॥ स्थितिं गुणदोषन्यूनाधिक्यव्यवस्थितिम् । तत्रत्यां स्वर्गस्थाम् ॥ ३५ ॥ सामग्र्या समग्रतया । क्षुद्रपुण्यानामपि

---

१ 'वृक्षगणाकीर्णे' इति पाठः.

२ 'कन्प्रत्ययः' इति पाठः.

मध्यमेन तथा मध्यः स्वर्गो भवति नान्यथा ।
कनिष्ठेन तु पुण्येन स्वर्गो भवति तादृशः ॥ ३७

परोत्कर्षासहिष्णुत्वं स्पर्धा चैव समैश्च तैः ।
कनिष्ठेषु च संतोषो यावत्पुण्यक्षयो भवेत् ॥ ३८

क्षीणे पुण्ये विशन्त्येतं मर्त्यलोकं च मानवाः ।
इत्यादिगुणदोषाश्च स्वर्गे राजन्नवस्थिताः ॥ ३९

इति श्रुत्वा वचो भद्रे स राजा प्रत्यभाषत ।

राजोवाच ।

नेच्छामि देवदूताहं स्वर्गमीदृग्विधं फलम् ॥ ४०

अतः परं महोग्रं[1] च तपः कृत्वा कलेवरम् ।
त्यक्ष्याम्यहमशुद्धं हि जीर्णां त्वचमिवोरगः ॥ ४१

देवदूत विमानेदं गृहीत्वा त्वं यथागतः ।
तथा गच्छ महेन्द्रस्य संनिधौ त्वं नमोऽस्तु ते ॥ ४२

देवदूत उवाच ।

इत्युक्तोऽहं गतो भद्रे शक्रस्याग्रे निवेदितुम् ।
यथावृत्तं निवेद्याथ महदाश्चर्यतां गतः ॥ ४३

पुनः प्राह महेन्द्रो मां श्लक्ष्णं मधुरया गिरा ।

इन्द्र उवाच ।

दूत गच्छ पुनस्तत्र तं राजानं नयाश्रमम् ॥ ४४

वाल्मीकेर्ज्ञाततत्त्वस्य स्वबोधार्थं विरागिणम् ।
संदेशं मम वाल्मीकेर्महर्षेस्त्वं निवेदय ॥ ४५

महर्षे त्वं विनीताय राज्ञेऽस्मै वीतरागिणे[2] ।
नस्वर्गमिच्छते तत्त्वं प्रबोधय महामुने ॥ ४६

तेन संसारदुःखार्तो मोक्षमेष्यति च क्रमात्[3] ।
इत्युक्त्वा देवराजेन प्रेषितोऽहं तदन्तिके ॥ ४७

मयागत्य पुनस्तत्र राजा वल्मीकजन्मने ।
निवेदितो महेन्द्रस्य राज्ञा मोक्षस्य साधनम् ॥ ४८

ततो वल्मीकजन्मासौ राजानं समपृच्छत ।
अनामयमतिप्रीत्या कुशलप्रश्नवार्तया ॥ ४९

राजोवाच ।

भगवन्धर्मतत्त्वज्ञ ज्ञातज्ञेय विदांवर ।
कृतार्थोऽहं भवद्दृष्ट्या तदेव कुशलं मम ॥ ५०

भगवन्प्रष्टुमिच्छामि तदविघ्नेन मे वद ।
संसारबन्धदुःखार्तैः कथं मुञ्चामि तद्वद ॥ ५१

वाल्मीकिरुवाच ।

शृणु राजन्प्रवक्ष्यामि रामायणमखण्डितम् ।
श्रुत्वावधार्य यत्नेन जीवन्मुक्तो भविष्यसि ॥ ५२

वसिष्ठरामसंवादं मोक्षोपायकथां शुभाम् ।
ज्ञातस्वभावो राजेन्द्र वदामि श्रूयतां बुध ॥ ५३

---

प्राचुर्येणेत्यर्थः । परममल्पपुण्येभ्योऽधिकम् । एकैकेनाप्युत्कृष्टतमेन तत्क्षयावध्युत्कृष्टं सुखं लभ्यमित्याह—**उत्तमेने**ति ॥ ३६ ॥ एवं मध्यमकनिष्ठत्वे अपि प्राचुर्योत्कृष्टत्वाभ्यां बोध्ये ॥ ३७ ॥ अनुत्तमपुण्यफलेषु दोषान्तराण्याह—**परे**ति । तैरुत्कृष्टैः स्पर्धमानैश्च सहेति शेषः । तथाच तत्प्रयुक्तं दुःखं दुःसहमिति भावः । यावदिति सर्वसाधारणमिदम् ॥ ३८ ॥ मानवाश्च भवन्ति रमणीयकर्मावशेषे । तच्च दुर्लभमिति सूचनाय चकारः ॥ ३९ ॥ स्वर्गं फलमित्यभेदान्वयः ॥ ४० ॥ पापानां तपसा निःशेषं क्षपणात् सुकृतानामसति रागे जन्माहेतुत्वाद्विरक्तस्य मम देहपातादेव मोक्षो भविष्यतीति राजाशयः ॥ ४१ ॥ विमानं च तदिदं चेति कर्मधारयः । अथवा स्वागमनप्रत्याख्यानेन विगतो मानोऽस्येति देवदूतविशेषणम् । विमानेति पृथक्पदम् । अत एव तत्क्षमापनाय नमोऽस्तु ते इत्युक्तिः ॥ ४२ ॥ महतां शक्रसभागतानामाश्चर्यतां विस्मयहेतुताम् ॥ ४३ ॥ अविषयनियोगदुःखितदूताश्वासनाय मधुरया । आश्रमं वाल्मीकेरित्युत्तरेणान्वयः ॥ ४४ ॥ स्वबोधार्थमात्मतत्त्वज्ञानाय । स्वपदे श्लेषात्तवापि स्वात्मबोधो भावीति ध्वनितम् । संदेशं वाचिकम् ॥४५॥ वीतरागिणे । रागमूलाः काम्यप्रवृत्तयो रागापगमादेव वीता गता यस्येत्यर्थः । स्वर्गं नेच्छते ॥ ४६ ॥ तेन तत्त्वबोधनेन । क्रमादुपदिष्टार्थस्य चित्ते संक्रमात्, मनोनाशान्तमननादिक्रमाद्वा ॥ ४७ ॥ मया महेन्द्रस्य संदेशेन सह राजा निवेदितः । राज्ञा स्वमोक्षस्य साधनं स्वाभिलषितं निवेदितमिति विपरिणामेन संबन्धः ॥ ४८ ॥ देशकोशपुत्रतपःप्रभृतीनां कुशलप्रश्नवार्तयं वार्थादनामयं समपृच्छतेत्यर्थः ॥ ४९ ॥ आद्येन विशेषणेन कर्मकाण्डरहस्यज्ञता, द्वितीयेन ब्रह्मतत्त्वज्ञता, तृतीयेन लोकतत्त्वज्ञता च दर्शिता । भवद्दृष्ट्या भवतो दर्शनेन, भवदीयकृपादृष्ट्या च । तत् भवद्दृष्टिप्रयुक्तं कार्तार्थ्यमेव[4] ॥ ५० ॥ प्रष्टुमिच्छामीति दूतसंदेशादेव प्रश्नविषयपरिज्ञानेऽपि 'नाऽपृष्टः कस्यचिद्ब्रूयात्' इति प्रसक्तोपेक्ष्यतावारणाय । तत् तत्र श्रेयोरूपे । 'श्रेयांसि बहुविघ्नानि' इतिप्रवादप्रसक्तां विघ्नसंभावनां निवारयति—**अविघ्नेने**ति । 'तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः' इति श्रुतेः । देवानां प्रातिकूल्ये हि विघ्नसंभावना स्यान्नतु तदस्ति देवराजाज्ञयैवाहं यतः पृच्छामीति भावः । संसारबन्धप्रयुक्तदुःखैरार्तिः पुनःपुनर्नाशस्तस्मान्मुञ्चामि मुक्तो भवामि । आद्यो मोक्षस्वरूपस्य प्रश्नो, द्वितीयो मोक्षसाधनस्य ॥ ५१ ॥ कैकेयीवरापदेशात्स्वस्थानप्रच्युतस्य रामस्य राक्षसान्विजित्य पुनः स्वस्थानायनाभ्युदयप्राप्तिवच्छापापदेशात्स्वरूपात्प्रच्युतस्य तस्य वसिष्ठोपदेशादज्ञानादिराक्षसान्विहत्य पुनः स्वस्वरूपावाप्त्यभ्युदयप्रतिपादकत्वादन्वर्थनामकं ग्रन्थं रामायणं श्रुत्वा श्रवणेन प्रमाणासंभावनां, मननेन त्ववधार्य प्रमेयासंभावनां, यत्नेन निदिध्यासनेन विपरीतभावनां च निरस्य । साक्षात्कारेणेति शेषः ॥ ५२ ॥ वसिष्ठरामयोः संवादरूपेण प्रवृत्तां मोक्षोपायानां कथाम् ।

---

१ 'महोग्रं तु' इति पाठः. २ 'रागिणो राग' इति पाठः. ३ 'उपदेशक्रमा' इति पाठः. ४ कार्तार्थ्यं कृतकृत्यत्वम्.

राजोवाच ।

को रामः कीदृशः कस्य बद्धो वा मुक्त एव वा ।
एतन्मे निश्चितं ब्रूहि ज्ञानं तत्त्वविदां वर ॥ ५४

वाल्मीकिरुवाच ।

शापव्याजवशादेव राजवेषधरो हरिः ।
आहृताज्ञानसंपन्नः किंचिज्ज्ञोऽसौ भवत्प्रभुः ॥ ५५

राजोवाच ।

चिदानन्दस्वरूपे हि रामे चैतन्यविग्रहे ।
शापस्य कारणं ब्रूहि कः शप्ता चेति मे वद ॥ ५६

वाल्मीकिरुवाच ।

सनत्कुमारो निष्काम अवसद्ब्रह्मसद्मनि ।
वैकुण्ठादागतो विष्णुस्त्रैलोक्याधिपतिः प्रभुः ॥ ५७
ब्रह्मणा पूजितस्तत्र सत्यलोकनिवासिभिः ।
विना कुमारं तं दृष्ट्वा ह्युवाच प्रभुरीश्वरः ॥ ५८
सनत्कुमार स्तब्धोऽसि निष्कामो गर्वचेष्टया ।
अतस्त्वं भव कामार्तः शरजन्मेति नामतः ॥ ५९
तेनापि शापितो विष्णुः सर्वज्ञत्वं तवास्ति यत् ।
किंचित्कालं हि तत्त्यक्त्वा त्वमज्ञानी भविष्यसि ६०
भृगुभार्यां हतां दृष्ट्वा ह्युवाच क्रोधमूर्छितः ।
विष्णो तवापि भार्याया वियोगो हि भविष्यति ६१
वृन्दया शापितो विष्णुश्छलनं यत्त्वया कृतम् ।
अतस्त्वं स्त्रीवियोगं तु वचनान्मम यास्यसि ॥ ६२
भार्या हि देवदत्तस्य पयोष्णीतीरसंस्थिता ।
नृसिंहवेषधृग्विष्णुं दृष्ट्वा पञ्चत्वमागता ॥ ६३
तेन शप्तो हि नृहरिर्दुःखार्तः स्त्रीवियोगतः ।
तवापि भार्यया सार्धं वियोगो हि भविष्यति ॥ ६४
भृगुणैवं कुमारेण शापितो देवशर्मणा ।
वृन्दया शापितो विष्णुस्तेन मानुष्यतां गतः ॥ ६५
एतत्ते कथितं सर्वं शापव्याजस्य कारणम् ।
इदानीं वच्मि तत्सर्वं सावधानमतिः शृणु ॥ ६६

इत्यार्षे श्रीमद्वासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मोक्षोपाये द्वात्रिंशत्साहस्र्यां संहितायां वैराग्यप्रकरणे सूत्रपातनको नाम प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः २

**दिवि भूमौ तथाकाशे बहिरन्तश्च मे विभुः ।
यो विभात्यवभासात्मा तस्मै सर्वात्मने नमः ॥ १**

'न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः' इति श्रुतेर्नातत्त्वज्ञोपदेशाच्छिष्यस्य कृतार्थतेति स्वस्य तत्त्वज्ञतामाह—**ज्ञातस्वभाव** इति ॥५३॥ वसिष्ठरामसंवादमित्यत्र द्वन्द्वेऽल्पाचोऽपि परनिपाताद्रामस्य शिष्यता सूचिता सा त्वज्ञस्यैव संभवति नेश्वरस्य । रामस्तु भगवदवतारत्वात्सर्वज्ञ एवोचित इति संदिहानः पृच्छति—**को राम** इति । किमन्य एव कश्चिद्रामनामा उत प्रसिद्धो नित्यमुक्तो विष्णुरित्यर्थः । ज्ञायतेऽनेनेति ज्ञानं निश्चयकारणमित्यर्थः ॥ ५४ ॥ तदेवाह—**शापे**ति । व्याजोऽपदेशः । आहृतेन स्वभक्तवाक्यसत्यतासंपादनायेच्छया स्वीकृतेनाज्ञानेनाज्ञप्रायः संपन्नः भवत् अभवत् । अडभावश्छान्दसः ॥ ५५ ॥ महर्षिभिरपराधिनो हि शप्यन्ते, अपराधो ह्यपूर्णकामस्याज्ञस्य स्यात्, नचानावृतचिदानन्दस्वरूपत्वादतथाभूतस्य रामस्य तत्संभवः शापादेव तदुक्तौ त्वन्योन्याश्रय इत्यभिप्रेत्याह—**चिदानन्दे**ति । परमार्थतश्चिदभिन्नानन्दस्वरूपे । व्यवहारेऽपि चैतन्यमेव भक्तानुकम्पया विग्रहात्मना परिणतं यस्य तस्मिन् ॥ ५६ ॥ निष्काम अवसदिति च्छान्दसं यत्वम् । निर्गताः कामा रागादयो यत्रेति निष्कामे ब्रह्मसद्मनीति वा ॥ ५७ ॥ कुमारं सनत्कुमारं विनान्यैः सत्यलोकनिवासिभिः पूजित इत्यनुषङ्गः ॥ ५८ ॥ कामेन ऋतो व्याप्तः । 'ऋते च तृतीयासमासे' इति वृद्धिः ॥ ५९ ॥ किंचित्कालमिति कर्मधारयः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया ॥ ६० ॥ क्रोधेन मूर्च्छितो मोहितः, समुच्छ्रितश्च ॥ ६१ ॥ वृन्दया जलन्धरभार्यया । छलनं पतिवेषेण मोहयित्वा पातिव्रत्यभङ्गरूपं वञ्चनम् । शापितः शप्तः । अध्यारोपितप्रेषणया णिच् ॥ ६२ ॥ वेषधृग्विष्णुमिति कर्मधारयः ॥ ६३ ॥ दुःखैर्दुःखसाध्यैः सुकृतैः ऋतः साक्षात्कृतोऽपि नृहरिस्तेन शप्तः ॥ ६४ ॥ आद्यशापेन साक्षादितरैराक्षेपादज्ञानप्राप्तिः । अतएव हि रामस्य त्रिः सीतावियोगो रावणापहारेण, मिथ्यापवादेन, भूतलप्रवेशेन चेति । न चिरं त्वयि वत्स्यतीति तारायाः वचनं त्वधिक्षेपमात्रं न शापः । तस्या जीवत्यपि वालिनि सुग्रीवेणोपभुक्तत्वस्य 'धर्मतो मातरं यस्तु स्वीकरोति जुगुप्सितः' इत्यङ्गदवाक्येन प्रसिद्धत्वात्पातिव्रत्यभङ्गेन निकृष्टयोनितया चोत्कृष्टाय रामाय शापप्रदाने असामर्थ्यात् । मानुष्यतां मनुष्य एव मानुष्यस्तद्भावम् ॥ ६५ ॥ तत् पूर्वपृष्टं मोक्षसाधनम् । सर्वं सानुबन्धम् । तत् महारामायणं सर्वं ग्रन्थतो द्वात्रिंशत्सहस्रमितं संपूर्णं वा ॥ ६६ ॥ इति वासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे प्रथमः सर्गः १ ॥

अथ प्रारिप्सितस्य महतः शास्त्रस्य निर्विघ्नपरिसमाप्तिप्रचयगमनादिसिद्धये 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि

१ 'कः शशापेति' इति पाठः. २ 'श्चिदानन्दस्वरूपे'. इति पाठः.

३ 'निष्कामे' इति सप्तमीपक्षेऽपि पूर्वरूपाभाव आर्षः.

**वाल्मीकिरुवाच ।**

**अहं बद्धो विमुक्तः स्यामिति यस्यास्ति निश्चयः ।**

**नात्यन्तमज्ञो नोत[2] ज्ञः सोऽस्मिञ्छास्त्रेऽधिकारवान्**

शास्त्राणि प्रथन्ते वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्ति' इति महाभाष्योपदर्शितश्रुतिबोधितकर्तव्यताकं सर्वावभासकचिदेकरससर्वप्रत्यगभिन्नपरब्रह्मप्रणतिलक्षणं मङ्गलमाचरन्नर्थाच्छास्त्रस्य विषयप्रयोजने दर्शयति—दिवीति । दिवि द्युलोके भूमौ भूलोके तथा आकाशे अन्तरिक्षलोके बहिरधिभूतं अन्तरध्यात्मं[1] चकारादधिदैवं च मे मम यो विभुर्विभाति विविधरूपेण प्रथते स्वाविद्यया । परमार्थतस्त्ववभासात्मा निर्विकारचिन्मात्रस्वभावस्तस्मै सर्वेषामात्मने नम इत्यर्थः । अथवा 'पृथिवी पूर्वरूपं द्यौरुत्तररूपम्' इति श्रुताविवात्रापि दिवि ब्रह्माण्डस्योर्ध्वकपाले स्वर्णमये, भूमावधःकपाले रजतमये, आकाशे तयोः संधौ सूक्ष्माकाशे, ब्रह्माण्डाद्बहिरन्तश्च यो विशेषेण सूर्यश्चन्द्राग्निवागादिभ्योऽप्यतिशयेन स्वप्रकाशापरिच्छिन्नस्वभावत्वाद्भाति । तत्कुतः । यतोऽयमवभासात्मा सूर्यादीनामप्यवभासक आत्मा च । 'येन सूर्यस्तपति तेजसेद्धः', 'आत्मैवास्य ज्योतिर्भवति', 'ज्योतिषामपि तज्ज्योतिः' इत्यादिश्रुतिस्मृतिभ्यः । तस्मै सर्वात्मने सर्ववस्तूनां पारमार्थिकस्वरूपभूताय नम इत्यर्थः । अथवा दिवि द्योतनैकरसे भूमानन्दात्मके तुर्यस्वरूपे तथा अवस्थाद्वयोत्पत्तिभूमावव्याकृताकाशे बहिर्बहिःप्रज्ञभोग्ये जागरेऽन्तः अन्तःप्रज्ञभोग्ये स्वप्ने चकारात्तत्संधौ मरणमूर्च्छाद्यवस्थासु च यो विविधो भाति स्थूलसूक्ष्मकारणाभिमानितया तद्भोक्तृतया तत्साक्षितया निष्प्रपञ्चपूर्णानन्दचिन्मात्रस्वभावेन चेत्यर्थः । तर्हि किं नानारस एव, नेत्याह—**अवभासात्मेति** । चिन्मात्रस्वभाव इत्यर्थः । तस्मै दृश्यस्य दृग्व्यतिरेकात्सर्वश्चासावात्मा च सावयत्वनिरवयत्वाभ्यामिति सर्वात्मने नम इत्यर्थः । अथवा दिवि सार्वज्ञ्यादिसंपन्नत्वाद्द्योतमाने कारणोपाधौ तथा भूमौ कर्मबीजोद्भवभूमौ कार्योपाधौ तथाकाशे अन्तराले आसमन्तात्काशते इति व्युत्पत्त्या स्वरूपप्रकाशबहुले वा जीवन्मुक्तिदशायां बहिर्निरुपाधिस्वरूपेऽन्तः कार्यकारणोपाध्यन्तर्गतमायान्तःकरणवृत्तिभेदेषु च यः अवभासैकस्वभावो विभाति तस्मै सर्वोपाधिनिष्कृष्टायात्मने नम इत्यर्थः । अथवा दिवि द्योतनात्मके तेजसि भूमौ पृथिव्यामाकाशे व्योम्नि अन्तः आन्तरालिकयोः सलिलपवनयोर्बहिर्बहिर्भूते अव्याकृते चकारान्निरुपाधिकत्वाच्छब्दाद्ययोग्यपारमार्थिकरूपे च योऽनुस्यूतः सन्मात्रस्वभावो विभाति स एवावभासमानः प्रत्यगात्मा तस्मै सर्वात्मने पूर्णानन्दस्वरूपाय मे मह्यं नम इत्यर्थः । अथवा दिवि देवलोके बहिस्तटस्थतया पूज्यदेवतेश्वराद्यात्मना भूमौ भूलोके अन्तः देहान्तर्वर्तितया पूजकात्मना आकाशे अन्तराले च क्रियाफलसाधनाद्यात्मना मे मम स्वरूपानवभासदशायां परिच्छेदेनान्यथा भातोऽपि यः संप्रति तत्त्वदृष्ट्युदयात्स्पष्टमवभासमानात्मा विभुस्त्रिविधपरिच्छेदशून्यो विस्पष्टं भाति

१ 'अन्तरमध्यात्म' इति पाठः. २ 'नो तज्ज्ञः' इत्यपि क्वचित्.

**कथोपायान्विचार्यादौ मोक्षोपायानिमानथ ।**

तस्मै सर्वात्मने । सर्वशब्दः पूर्णपरस्तस्मात्तत्सर्वमभवदितिवत्पूर्णानन्दस्वरूपाय नम इत्यर्थः । अथवा दिवि उपरिष्टाद्भूमावधस्तादाकाशेऽन्तराले बहिः प्रागादिदिक्षु च अन्तः शरीरान्तः चकारात्तत्पूर्वोत्तरकालयोर्यः अवभासात्मा चिदेकरसो विभाति तत्त्वदृशो मम । 'आत्मैवाधस्तादात्मोपरिष्टात्' इत्यादिश्रुतेः । तस्मै सर्वात्मने'आत्मैवेदं सर्वं'मिति सर्वप्रपञ्चबाधेन परिशेषिताय परमात्मने नम इत्यर्थः । एवमर्थान्तराण्यपि यथाबुद्धिवैभवमूहनीयानि । अत्रार्थात्तथाविधं ब्रह्मैवाज्ञातं शास्त्रस्य विषयः । ज्ञानात्तद्भावस्थितिश्च परमनिर्वाणरूपं प्रयोजनमिति सूचितम् । उत्तरत्राप्येतदेव स्पष्टं दर्शयिष्यते ॥ १ ॥

**अधिकारी कथोपायसंबन्धो धातृशासनात् ।**
**निर्माणमस्य ग्रन्थस्य मुक्तचर्या च कीर्त्यते ॥ १ ॥**

अथास्मिन् ग्रन्थे कोऽधिकारी किमज्ञ उत ज्ञः । नाद्यः । तस्य देहादावात्मबुद्धिदार्ढ्येन रागितया च मुमुक्षाविरहात्[3] । नच विषयदोषदर्शनाज्जननमरणादिदुःखदर्शनाच्च तस्यैव वैराग्योदयेच्छया मुमुक्षासंपत्तावधिकार इति वाच्यम् । रागिणामुत्कटविषयरिरक्षिषादर्शनेन सत्स्वेव विषयेषु तद्दोषनिर्हरणोपायान्वेषितया[4] विशिष्टविषयान्वेषितया चैहिकामुष्मिकतदुपायेच्छुतया प्रवृत्तेः । नापि ज्ञः । तस्य कृतकृत्यतया ग्रन्थसाध्यप्रयोजनालिप्सुतया ग्रन्थे प्रवृत्त्यनुपपत्तेरित्याशङ्क्य विशिष्टाधिकारिणं दर्शयति—**अहमिति** । उतेत्यप्यर्थे । सत्यं नात्यन्तमज्ञो नापि ज्ञोऽस्मिञ्शास्त्रेऽधिकारी । किन्तु यस्याहं बद्धोऽस्मिन् संसारेऽनादिकालादारभ्य कारानिगडादिबद्ध इव परिच्छेदपारवश्यजन्मजरामरणादिदुःखमनुभवञ्शोचामि । आत्यन्तिकशोकतरणे चात्मज्ञानमेवोपायः । 'तरति शोकमात्मवित्' इति श्रुतेः । तेनात्मज्ञानेनाहं विमुक्तः स्यामित्युत्कटजिज्ञासासहितो निश्चयोऽस्ति स विनयोपायनादिना गुरुमुपगतोऽस्मिञ्छास्त्रेऽधिकारवान् । शास्त्रश्रवणादिफलभागित्यर्थः । तथाचाज्ञस्यैव बहुतरसुकृतैः क्षीणरागादिदोषस्य विवेकोदयाज्जिज्ञासोरधिकार इति भावः ॥ २ ॥ ननु क्षीणरागादिदोषस्त्रैवर्णिकश्चेत्स संन्यासपूर्वकवेदान्तश्रवण एवाधिकारी । पूर्वकाण्डार्थानुष्ठानस्य चित्तशुद्धिद्वारोत्तरकाण्डाधिकारप्रापकत्वस्य 'तमेतं वेदानुवचनेन' इत्यादिश्रुतिसिद्धत्वात् । नचात्रैवर्णिकस्यात्राधिकारः । तस्य 'नावेदविन्मनुते तं बृहन्तम्' इत्यधिकारनिषेधात्, तस्मान्नाधिकारी सुलभ इति चेत् । न । स्मार्तकर्मवदुपपत्तेः । यथा 'त्रैवर्णिकस्य त्रेताग्निसाध्ये कर्मण्यधिकारेऽप्यनाहिताग्निसाधारणः स्मार्तकर्माधिकारोऽप्यस्त्येव तथा श्रौतज्ञानाधिकारिणोऽप्यसंन्यासिमुमुक्षुसाधारणोऽस्मिन्नपि ग्रन्थेऽस्त्यधिकारः । अज्ञानावधिकश्च । अस्यापि स्मृतिवद्वेदोपबृंहणत्वात् । तथाचोक्तम्—'वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणा-

३ 'मुमुक्षाभिविरहात्' इति पाठः. ४ 'अन्वेषणतया' इति पाठः.

यो विचारयति प्राज्ञो न स भूयोऽभिजायते ॥ ३
अस्मिन्रामायणे रामकथोपायान्महाबलान् ।
एतांस्तु प्रथमं कृत्वा पुराहमरिमर्दन ॥ ४
शिष्यायास्मि विनीताय भरद्वाजाय धीमते ।
एकाग्रो दत्तवांस्तस्मै मणिमब्धिरिवार्थिने ॥ ५
तत एते कथोपाया भरद्वाजेन धीमता ।
कस्मिंश्चिन्मेरुगहने ब्रह्मणोऽग्र उदाहृताः ॥ ६
अथास्य तुष्टो भगवान्ब्रह्मा लोकपितामहः ।
वरं पुत्र गृहाणेति तमुवाच महाशयः ॥ ७

भरद्वाज उवाच ।

भगवन्भूतभव्येश वरोऽयं मेऽद्य रोचते ।
येनेयं जनता दुःखान्मुच्यते तदुदाहर ॥ ८

श्रीब्रह्मोवाच ।

गुरुं वाल्मीकिमत्राशु प्रार्थयस्व प्रयत्नतः ।
तेनेदं यत्समारब्धं रामायणमनिन्दितम् ॥ ९
तस्मिञ्छ्रुते नरो मोहात्समग्रात्संतरिष्यति ।
सेतुनेवाम्बुधेः पारमपारगुणशालिना ॥ १०

श्रीवाल्मीकिरुवाच ।

इत्युक्त्वा स भरद्वाजं परमेष्ठी मदाश्रमम् ।
अभ्यागच्छत्समं तेन भरद्वाजेन भूतकृत् ॥ ११
तूर्णं संपूजितो देवः सोऽर्घ्यपाद्यादिना मया ।
अवोचन्मां महासत्त्वः सर्वभूतहिते रतः ॥ १२
रामस्वभावकथनादस्माद्वरमुने त्वया ।
नोद्वेगात्स परित्याज्य आसमाप्तेरनिन्दितात् ॥ १३
ग्रन्थेनानेन लोकोऽयमस्मात्संसारसंकटात् ।
समुत्तरिष्यति क्षिप्रं पोतेनेवाशु सागरात् ॥ १४
वक्तुं तदेवमेवार्थमहमागतवानयम् ।
कुरु लोकहितार्थं त्वं शास्त्रमित्युक्तवानजः ॥ १५
मम पुण्याश्रमात्तस्मात्क्षणादन्तर्द्धिमागतः ।
मुहूर्ताभ्युत्थितः प्रोच्चैस्तरङ्ग इव वारिणः ॥ १६
तस्मिन्प्रयाते भगवत्यहं विस्मयमागतः ।
पुनस्तत्र भरद्वाजमपृच्छं स्वस्थया धिया ॥ १७

---

त्मना ॥' इति । तत्र पूर्वकाण्डस्य रामचरितकथाव्याजेनोपबृंहणं षट्काण्डं सोत्तरं पूर्वरामायणम्, उत्तरकाण्डस्य षट्प्रकरणमिदं सोत्तरमिति । यथाच केषुचित्स्मार्तकर्मसु स्त्रीशूद्रसाधारणोऽधिकारस्तथास्यापि श्रवणे पुराणवत् । 'श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः', 'जनश्च शूद्रोऽपि महत्त्वमीयात्' इत्यादिवचनलिङ्गात् । 'नावेदविन्मनुते तं बृहन्तं', 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यादिवचनं त्ववेदविदः श्रौतज्ञानानधिकारपरमिति केचित् । अपरोक्षज्ञानापर्यवसानपरमित्यन्ये । वेदपूर्वकत्वप्राशस्त्यपरमित्यपरे । सर्वथाप्यस्त्येवान्येषामपि पौराणिकसाधारणे ज्ञानेऽधिकारः 'स हि सर्वैर्विजिज्ञास्य आत्मा वर्णैस्तथाऽऽश्रमैः' इत्यादिवचनेभ्यः । तत्र श्रौतज्ञाने पूर्वकाण्डोक्तधर्मानुष्ठानजन्या चित्तशुद्धिरिवेहापि पूर्वरामायणोपदर्शितस्वस्ववर्णाश्रमोचितनिष्कामधर्मानुष्ठानजा चित्तशुद्धिर्जिज्ञासोत्पादनद्वारा हेतुरिति पूर्वोत्तररामायणयोर्हेतुहेतुमद्भावसंगतिं दर्शयन्सर्वानर्थनिवृत्तिरूपं प्रयोजनान्तरमाह—**कथोपायानिति** । कथा एव धर्मतत्त्वज्ञानानुष्ठानेश्वरप्रपत्तिषु ज्ञानाधिकारप्रापकेषूपायो यस्मिन् ग्रन्थे स पूर्वरामायणग्रन्थः कथोपायः । काण्डभेदाभिप्रायं बहुवचनम् । तानादौ विचार्य तदर्थानुष्ठानप्राप्ताधिकारः सन्योऽधिकारीमान्वक्ष्यमाणषट्प्रकरणरूपान्मोक्षोपायान्विचारयति प्राज्ञः प्रक्षालुष्टकामकर्मवासनाऽज्ञानबीजः स भूयो नाभिजायते जन्मादिदुःखभाङ् न भवति । विमुच्यत इत्यर्थः ॥ ३ ॥ अस्मिन्सांप्रतिके षट्पञ्चाशत्सहस्रसंमिते रामायणे अनादिकालाभ्यस्तरागादिदोषोच्छेदक्षमत्वान्महाबलान् रामकथारूपांश्चतुर्विंशतिसहस्रमितान्षट्काण्डानहं कृत्वेत्युत्तरेण संबन्धः ॥ ४ ॥ शिष्यविशेषणान्यधिकारसंपत्तिद्योतकानि । एक ऐकाग्र्यो ग्रहणधारणप्रचारपटुः प्रधानशिष्यो यस्य स तथा । अनुग्रहप्रेमसमाहितचित्तो वा । अर्थिन इति भरद्वाजस्यापि विशेषणम् ॥ ५ ॥ एते मत्तः प्राप्ताः पूर्वरामायणरूपाः । उदाहृताः कीर्तिताः ॥ ६ ॥ वरव्याजेन जगदुद्धारसाधनं मोक्षशास्त्रं करणीयमिति महानाशयोऽभिप्रायो यस्य स तथा ॥७॥ भूतं पूर्वमुत्पन्नम् । भव्यमुत्पत्स्यमानम् । अद्य पूर्वरामायणार्थानुष्ठानजन्यचित्तपरिशुद्धिकाले । जनता अधिकारिजनसमूहः ॥ ८ ॥ अत्रास्मिन् पृष्टेऽर्थे । यद्यस्मात्समारब्धं नतु कृत्स्नं कृतम् ॥ ९ ॥ श्रुते अर्थात्कृत्स्नसिद्ध्यनन्तरमिति गम्यते । 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति' इत्यादिस्मृतिप्रसिद्धानन्तगुणशालिना ॥ १० ॥ ११ ॥ यद्यपि स्रष्टा रजःप्रधानस्तथापि जगदुद्धारोद्भूतकरुणत्वान्महासत्त्वः सत्त्वगुणसंपन्नोऽतएव सर्वभूतहिते रतः ॥ १२ ॥ ल्यब्लोपे पञ्चमी । रामस्वभावकथनं प्रस्तुत्येत्यर्थः । उद्वेगाद्विस्तृतग्रन्थनिर्माणक्लेशप्रयुक्तात्स ग्रन्थ आसमाप्तेर्न परित्याज्यः । अवश्यं समग्रो निर्मातव्य इति यावत् ॥ १३ ॥ संसारसंकटादित्यपादानपञ्चम्या समुत्तीर्णस्यात्यन्तिकं संसारविश्लेषं दर्शयति । क्षिप्रं क्षेपः प्रेरणं तत्स्वभावेन पोतेन । व्यत्ययेन प्रथमा । अन्यथा आशुपदेन पुनरुक्तयापत्तेः । 'क्षिप्रपोतेन' इति पाठश्चेन्न कापि चिन्ता । आशु ज्ञानोदयसमकालमेव । ननु पोतेन सागरसमुत्तरणमेवाप्रसिद्धमिति कथं दृष्टान्तः । एवं तर्हि सागरे पतितस्य पोतेनोद्धरणमेवात्र समुत्तरणं विवक्षितं आशुपदस्वारस्यात् । अतएवापादानपञ्चम्येव कृतेति ॥ १४ ॥ तत्तस्माद्धेतोर्भरद्वाजद्वारा आज्ञासंदेशसंभवेऽप्येवमर्थं वक्तुमयं जगन्मान्योऽहमेवागतवानिति संबन्धः ॥ १५ ॥ ब्रह्मपादस्पर्शेन पुण्यतमत्वमाश्रमस्य ॥१६॥ स्वस्थया धियेत्युक्तेः पूर्वं ब्रह्मागमनहर्षविस्मयव्यग्रचित्तत्वाद्व्य-

---

१ शिष्यायास्मै इति पाठः.

२ मदाश्रमं इति पाठः.

किमेतद्ब्रह्मणा प्रोक्तं भरद्वाज वदाशु मे ।
इत्युक्तेन पुनः प्रोक्तं भरद्वाजेन तेन मे ॥ १८
भरद्वाज उवाच ।
एतदुक्तं भगवता यथा रामायणं कुरु ।
सर्वलोकहितार्थाय संसारार्णवतारकम् ॥ १९
मह्यं च भगवन्ब्रूहि कथं संसारसंकटे ।
रामो व्यवहृतो ह्यस्मिन्भरतश्च महामनाः ॥ २०
शत्रुघ्नो लक्ष्मणश्चापि सीता चापि यशस्विनी ।
रामानुयायिनस्ते वा मन्त्रिपुत्रा महाधियः ॥ २१
निर्दुःखितां यथैते तु प्राप्तास्तद्ब्रूहि मे स्फुटम् ।
तथैवाहं भविष्यामि ततो जनतया सह ॥ २२
भरद्वाजेन राजेन्द्र वदेत्युक्तोऽस्मि सादरम् ।
तदा कर्तुं विभोराज्ञामहं वक्तुं प्रवृत्तवान् ॥ २३
शृणु वत्स भरद्वाज यथापृष्टं वदामि ते ।
श्रुतेन येन संमोहमलं दूरे करिष्यसि ॥ २४
तथा व्यवहर प्राज्ञ यथा व्यवहृतः सुखी ।
सर्वासंसक्तया बुद्ध्या रामो राजीवलोचनः ॥ २५
लक्ष्मणो भरतश्चैव शत्रुघ्नश्च महामनाः ।
कौसल्या च सुमित्रा च सीता दशरथस्तथा ॥ २६
कृतास्त्रश्चाऽविरोधश्च बोधपारमुपागताः ।
वसिष्ठो वामदेवश्च मन्त्रिणोऽष्टौ तथेतरे ॥ २७
धृष्टिर्जयन्तो भासश्च सत्यो विजय एव च ।
विभीषणः सुषेणश्च हनुमानिन्द्रजित्तथा ॥ २८
एतेऽष्टौ मन्त्रिणः प्रोक्ताः समनीरागचेतसः ।
जीवन्मुक्ता महात्मानो यथाप्राप्तानुवर्तिनः ॥ २९
एतैर्यथा हुतं दत्तं गृहीतमुषितं स्मृतम् ।
तथा चेद्वर्तसे पुत्र मुक्त एवासि संकटात् ॥ ३०
अपारसंसारसमुद्रपाती
लब्ध्वा परां युक्तिमुदारसत्त्वः ।
न शोकमायाति न दैन्यमेति
गतज्वरस्तिष्ठति नित्यतृप्तः ॥ ३१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे सूत्रपातनको नाम द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ३

भरद्वाज उवाच ।
जीवन्मुक्तस्थितिं ब्रह्मन्कृत्वा राघवमादितः ।
क्रमात्कथय मे नित्यं भविष्यामि सुखी यथा ॥ १

वाक्यमर्थतो नैवधारितमिति गम्यते । अतएवापृच्छमित्याह ॥ १७ ॥ १८ ॥ यथा पूर्वं कथोपायरामायणं कृतं तथा मोक्षोपायरामायणमिति शेषः ॥१९॥ राम कथं व्यवहृतो व्यवहृतवान् किमज्ञः शोचन्नितरवदुत जीवन्मुक्तवत् ॥ २० ॥ चकाराद्दशरथपरिग्रहः । चकारोऽपिशब्दद्वयं च तत्परिवारसमुच्चयार्थम् ॥२१॥ स्फुटं मद्बोधपर्यवसितम् । जनतया त्वदुपदेशश्रवणकृतार्थजनसमूहेन ॥ २२ ॥ सादरमुपायनाहरणोपगमनप्रणतिप्रार्थनाद्यादरसहितम् ॥ २३ ॥ संमोह आत्मतत्त्वापरिज्ञानं तद्रूपं मलं पङ्कम् । अलमिति वा छेदः ॥ २४ ॥ असंसक्तया मिथ्येति निश्चयादनभिनिविष्टया ॥ २५ ॥ महामना अपरिच्छिन्नवस्तुनिवेशात्तथाविधचित्तः । चकाराः पूर्ववत् ॥ २६ ॥ कृतास्त्राविरोधौ रामसखायौ । बोधपारे चरमं बोधं यदुत्तरं बोद्धव्यान्तरापरिशेषः ॥ २७ ॥ सत्यो यथार्थवक्ता । इन्द्रजिदयमन्य एव सुग्रीवामात्यः ॥ २८ ॥ अन्तः समनीरागचेतसो बहिस्तु यथाप्रारब्धं प्राप्तमनुवर्तमानाः ॥२९॥ हुतं दत्तमिति श्रौतस्मार्तकर्मोपलक्षणम् । गृहीतमुषितमिति तत्तत्कालोचितलौकिकसव्यवहारोपलक्षणम् । स्मृतमित्युभयगोचरपूर्वापरप्रतिसंधानोपलक्षणम् ॥३०॥ युक्तिं तत्त्वनिश्चयादन्तः समरसत्वम् । उदारसत्त्वो दृढीकृतोत्कृष्टज्ञानबलः । इष्टवियोगजं दुःखं शोकः, दीनः कृपणस्तद्भावो दैन्यम्, तयोर्मूलमभिमानज्वरः स गतो यस्य । निरतिशयानन्दात्मना स्थितः सन्नित्यतृप्तः ॥३१॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे सूत्रपातनको नाम द्वितीयः सर्गः ॥ २ ॥

दृश्यसंमार्जनोपायो वासनाभेदलक्षणम् ।
रामस्य तीर्थयात्रा च विस्तरेणात्र वर्ण्यते ॥ १ ॥

यथा रामादयो जीवन्मुक्ता व्यवहृतवन्तस्तथा त्वं व्यवहरेत्युक्तो जीवन्मुक्तस्थितिप्राप्त्युपायं रामस्य तत्प्राप्तिक्रमोपवर्णनश्रवणद्वारैव जिज्ञासमानो भरद्वाजः पृच्छति—**जीवन्मुक्तेति** । राघवमादितः कृत्वा वर्ण्यत्वेन प्रधानीकृत्य जीवन्मुक्तस्थितिं कथयेति संबन्धः । अथवा राघवं क्रमाज्जीवन्मुक्तस्थितिं जीवन्मुक्तावस्थं कृत्वा कल्पयित्वा मे आदितः कथय । यथा येन क्रमेणाहं नित्यं सुखी भविष्यामीति संबन्धः । अथवा राघवं संवादकथायामादितः प्रष्टृत्वेन वसिष्ठं च वक्तृत्वेन कृत्वेत्यर्थः । तथाच जनकयाज्ञवल्क्यौ कल्पयित्वा यथा श्रुतिः स्वयमेव संवादकथया तत्त्वं बोधयति तथा त्वमपि बोधयेत्यर्थः । तथाचात्र तत्त्वज्ञत्वेन कल्पितानां दशरथादीनां पूर्वरामायणे मूढचर्यामुक्त्यभावदर्शने नित्यमुक्तस्य च रामस्य 'तस्य ह न देवाश्च नाभूत्या ईशते' इत्यादिश्रुति-

१ निर्दुःखतां यथैते तु इति पाठः. २ समुद्रमध्ये इति पाठः. ३ नावधारयम् इति पाठः. ४ प्रकारेणाहम् इति पाठः.

**श्रीवाल्मीकिरुवाच ।**

**भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत् ।**
**अपुनःस्मरणं मन्ये साधो विस्मरणं वरम् ॥ २**
**दृश्यात्यन्ताभावबोधं विना तन्नानुभूयते ।**
**कदाचित्केनचिन्नाम स्वबोधोऽन्विष्यतामतः ॥ ३**
**स चेह संभवत्येव तदर्थमिदमाततम् ।**
**शास्त्रमाकर्णयसि चेत्तत्त्वमाप्स्यसि नान्यथा ॥ ४**
**जगद्भ्रमोऽयं दृश्योऽपि नास्त्येवेत्यनुभूयते ।**
**वर्णो व्योम्न इवाखेदाद्विचारेणामुनाऽनघ ॥ ५**
**दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ।**
**संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥ ६**
**अन्यथा शास्त्रगर्तेषु लुठतां भवतामिह ।**
**भवत्यकृत्रिमाज्ञानां कल्पैरपि न निर्वृतिः ॥ ७**
**अशेषेण परित्यागो वासनानां य उत्तमः ।**
**मोक्ष इत्युच्यते ब्रह्मन्स एव विमलक्रमः ॥ ८**
**क्षीणायां वासनायां तु चेतो गलति सत्वरम् ।**
**क्षीणायां शीतसंतत्यां ब्रह्मन्हिमकणो यथा ॥ ९**
**अयं वासनया देहो ध्रियते भूतपञ्जरः ।**
**तनुनान्तर्निविष्टेन मुक्तौघस्तन्तुना यथा ॥ १०**
**वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ।**

---

विरुद्धशापनिमित्ताज्ञत्वादिवर्णने च न क्षतिः; अनादेर्जीवस्य ब्रह्माभेदबोधनाय श्रुतौ ब्रह्मण एव कार्योपाधिप्रवेशेनागन्तुकजीवभावकल्पनवदविरोधोपपत्तेः ॥ १ ॥ एवं वाल्मीकिः पृष्टो लक्षणस्वरूपसाधनफलैर्जीवन्मुक्तिस्थितिं विस्तरेण विवक्षुः प्रथमं सुखप्रतिपत्तये संक्षिप्य मुक्तिलक्षणस्वरूपे दर्शयति—**भ्रमस्येति** । हे साधो, आकाशे नैल्यवदत्यन्तासंभावितस्य कल्पनया जातस्य जागतस्य जगतः संबन्धिनोऽध्यासलक्षणस्य भ्रमस्य तन्मूलविद्यावासनोच्छेदेनापुनःस्मरणं यथा भवति तथा विस्मरणं यत्तदेव वरं सर्वोत्कृष्टं मुक्तिलक्षणं स्वरूपं च मन्ये । प्रमाणानुभवाभ्यां निश्चितवानस्मीत्यर्थः । यद्यपि परोक्षज्ञानिनोऽपि सुषुप्तौ निर्विकल्पसमाधौ च दृश्यविस्मरणमस्ति तथापि तन्नापुनःस्मरणम् । अथवा पुनः स्मर्यते येनान्तःकरणेन तत्पुनःस्मरणं न विद्यते यस्मिंस्तत्तथा विस्मरणं स्मरणाभावः । द्वैतप्रतिभासमात्राभावोपलक्षणमेतत् । अथवा विस्मरणमिव विस्मरणम् । यथा विस्मृतविषयस्य सत्येवानुभवितर्यप्रतीतिस्तथा सत्येव चैतन्ये दृश्याप्रतीतिरित्यर्थः । तर्हि किं परमार्थसत्यस्यैव दृश्यस्य सांख्याभिमतमुक्ताविवाप्रतीतिमात्रं तन्नेत्याह—**भ्रमस्येति** । अध्यस्तस्येत्यर्थः । कथं तस्य भ्रमत्वं संस्काराजन्यत्वादित्याशङ्क्याह—**जागतस्येति** । पूर्वपूर्वजगद्व्यवहारजन्यसंस्कारपरिनिष्ठितस्येत्यर्थः । ननु तर्हि दोषजत्वाभावान्निरधिष्ठानत्वाच्च न भ्रमत्वमित्याशङ्क्याह—**आकाशवर्णवज्जातस्येति** । यथा दूरत्वाविमर्शदोषजत्वादाकाशवर्णभ्रमस्तद्वदविद्यादोषाद्ब्रह्मणि जगद्भ्रम इत्यर्थः । तथा चात्यन्तिकदृश्योच्छेदस्तल्लक्षणं, तदुपलक्षितचिन्मात्रावस्थितिः स्वरूपमित्यर्थः ॥ २ ॥ मन्ये इत्यनेन तयोः स्वानुभवसिद्धत्वं दर्शितम् । तर्ह्यस्माभिस्तत्कुतो नानुभूयते तत्राह—**दृश्येति** । दृश्यस्यात्यन्ताभावबोधो बाधस्तं विना । तत् उक्तं लक्षणं स्वरूपं च । अननुभवस्य कालतो देशतश्च व्यापकत्वप्रदर्शनाय कदाचित्केनचिदिति । दृश्यबाधस्तर्हि केन हेतुना तमाह—**स्वबोध** इति । सर्वजगदधिष्ठानप्रत्यगभिन्नात्मतत्त्वसाक्षात्कारादेव स इत्यतस्तत्साक्षात्कारोऽन्विष्यताम् । उपायेन साध्यतामित्यर्थः ॥ ३ ॥ तर्हि तस्य क उपायस्तत्राह—**स चेति** । इहास्मिञ्शास्त्रे अधिगते सतीति शेषः । आकर्णयसि चेत् । यावत्तत्त्वनिर्णयमिति शेषः ॥ ४ ॥ उक्तमर्थमेव स्फुटतरमाह—**जगदिति** द्वाभ्याम् । अमुना एतद्ग्रन्थोपदर्शितेन ॥ ५ ॥ अनुभूयत इत्युक्तोऽनुभवः किमात्मचैतन्यमेवोतान्यः । न तावदन्यः । चिद्व्यतिरिक्तस्य जडतया विषयतया चानुभवत्वायोगात् । आत्मैव चेत्स पूर्वमेवास्तीति किं शास्त्रेणेत्याशङ्क्याह—**दृश्यमिति** । सत्यमात्मैवानुभवस्तथाप्यसौ दृश्यसहकृतो न तदनुभवः किंतु मनसो वृत्तिरूपेणात्मतत्त्वसाक्षात्कारबोधेनाविद्यानाशात्तदुपादानकदृश्यमार्जनं दृश्यं कालत्रयेऽपि नास्तीत्येवंरूपं संपन्नं चेन्नित्यसिद्धात्मरूपापि परा निर्वाणनिर्वृतिस्तस्मात्तत्त्वज्ञानादुत्पन्नेव भवतीति केवलस्तद्द्वारा स्वरूपभूतोऽप्यनुभवः शास्त्रफलमित्यर्थः ॥६॥ ननु शास्त्रान्तरोपदर्शितोपायैरेव मुक्तिः किं न स्यात्तत्राह—**अन्यथेति** । उक्तोपायापरिग्रहे अकृत्रिमा अजन्या अनादिरज्ञा अज्ञानं येषां अनात्मशास्त्रगर्तेषु लुठतां रागान्धपतनहेतुगर्तप्रायतत्तच्छास्त्रबोधितोपायैरैहिकामुष्मिकविषयासक्त्या प्रवर्तमानानां, अतएव तदुपभोगाय पुनःपुनरिह संसारे भवतां जन्म गृह्णतां पुरुषापसदानामनन्तैर्ब्रह्मकल्पैरपि निर्वृतिर्विश्रान्तिसुखं नास्ति । अनाद्यज्ञानस्य ज्ञानातिरिक्तसाधनसहस्रैरप्यनिवृत्तेरिति भावः ॥ ७ ॥ ननु उपासनाद्युपायान्तरसाध्याः सालोक्यादयोऽन्येऽपि मोक्षाः प्रसिद्धास्तैस्तेषां कथं न निर्वृतिस्तत्राह—**अशेषेणेति** । वासनानां जन्मबीजानामशेषेण यः परित्यागो मूलोच्छेदेनात्यन्तोच्छेदः स मुख्यो मोक्षः । मुचधातोर्बन्धनिवृत्तौ रूढत्वाद्वासनानामेव मुख्यबन्धत्वात्सालोक्यादौ तदभावान्मोक्षशब्दो गौण इति स मुख्य एव विमलैर्विगताविद्यादिमलैः क्रम्यते नान्यैः । कर्मभिरुपासनैः श्रवणादिभिश्च दिनेदिने चित्तवैमल्यमेव सर्ववासनाक्षयान्तं साधनक्रमो यस्य तथाविध इति वार्थः ॥ ८ ॥ ननु वासनापगमेऽपि तद्धेतोर्मनसः सत्त्वात्पुनर्वासना उत्पत्स्यन्ते ततो बन्धोऽपि स्यादित्याशङ्क्याह—**क्षीणायामिति** । मनसो वासनापुञ्जरूपत्वादित्यर्थः ॥ ९ ॥ मनसि नष्टेऽपि स्थूलदेह एव बन्धः स्यास्यतीत्याशङ्क्याह—**अयमिति** । भूतपञ्जरो भूतसमुदायारब्धः, भूतानां प्राणिपक्षिणां पञ्जरस्थानीयो वा । तथाच वासनाक्षये सोऽपि निवर्तेत इत्यर्थः ॥१०॥ एवमुपोद्घातेन

---

१ सर्ववासनाक्षये इति पाठः.

